# श्रीराम आपदुद्धारकस्तोत्रम्

आपदामपहर्तारं दातारं सर्वसम्पदां
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ।

नमः कोदण्डहस्ताय सन्धीकृतशराय च
दण्डिताखिलदैत्याय रामायापन्निवारिणे ॥ १॥

आपन्नजनरक्षैकदीक्षायामिततेजसे ।
नमोऽस्तु विष्णवे तुभ्यं रामायापन्निवारिणे ॥ २॥

पदाम्भोजरजस्पर्शपवित्रमुनियोषिते ।
नमोऽस्तु सीतापतये रामायापन्निवारिणे ॥ ३॥

दानवेन्द्रमहामत्तगजपञ्चास्यरूपिणे ।
नमोऽस्तु रघुनाथाय रामायापन्निवारिणे ॥ ४॥

महिजाकुचसंलग्नकुङ्कुमारुणवक्षसे ।
नमः कल्याणरूपाय रामायापन्निवारिणे ॥ ५॥

पद्मसम्भवभूतेशमुनिसंस्तुतकीर्तये ।
नमो मार्ताण्डवंश्याय रामायापन्निवारिणे ॥ ६॥

हरत्यार्तिं च लोकानां यो वा मधुनिषूदनः ।
नमोऽस्तु हरये तुभ्यं रामायापन्निवारिणे ॥ ७॥

तापकारणसंसारगजसिंहस्वरूपिणे ।
नमो वेदान्तवेद्याय रामायापन्निवारिणे ॥ ८॥

रङ्गत्तरङ्गजलधिगर्वहृच्छरधारिणे ।
नमः प्रतापरूपाय रामायापन्निवारिणे ॥ ९॥

दारोपहितचन्द्रावतंसध्यातस्वमूर्तये ।
नमः सत्यस्वरूपाय रामायापन्निवारिणे ॥ १०॥

तारानायकसङ्काशवदनाय महौजसे ।
नमोऽस्तु ताटकाहन्त्रे रामायापन्निवारिणे ॥ ११॥

रम्यसानुलसच्चित्रकूटाश्रमविहारिणे ।
नमस्सौमित्रिसेव्याय रामायापन्निवारिणे ॥ १२॥

सर्वदेवाहितासक्त दशाननविनाशिने ।
नमोऽस्तु दुःखध्वंसाय रामायापन्निवारिणे ॥ १३॥

रत्नसानुनिवासैक वन्द्यपादाम्बुजाय च ।
नमस्त्रैलोक्यनाथाय रामायापन्निवारिणे ॥ १४॥

संसारबन्ध मोक्षैकहेतुदामप्रकाशिने ।
नमः कलुषसंहर्त्रे रामायापन्निवारिणे ॥ १५॥

पवनाशुगसङ्क्षिप्तमारीचादिसुरारये ।
नमो मखपरित्रात्रे रामायापन्निवारिणे ॥ १६॥

दाम्भिकेतरभक्तौघमहानन्दप्रदायिने ।
नमः कमलनेत्राय रामायापन्निवारिणे ॥ १७॥

लोकत्रयोद्वेगकरकुम्भकर्णशिरश्छिदे ।
नमो नीरददेहाय रामायापन्निवारिणे ॥ १८॥

काकासुरैकनयनहरल्लीलास्त्रधारिणे ।
नमो भक्तैकवेद्याय रामायापन्निवारिणे ॥ १९॥

भिक्षुरूप समाक्रान्तबलिसर्वैकसम्पदे ।
नमो वामनरूपाय रामायापन्निवारिणे ॥ २०॥

राजीवनेत्रसुस्पन्दरुचिराङ्गसुरोचिषे ।
नमः कैवल्यनिधये रामायापन्निवारिणे ॥ २१॥

मन्दमारुतसंवीतमन्दारद्रुमवासिने ।
नमः पल्लवपादाय रामायापन्निवारिणे ॥ २२॥

श्रीकण्ठचापदलनधुरीणबलबाहवे ।
नमः सीतानुषक्ताय रामायापन्निवारिणे ॥ २३॥

राजराजसुहृद्योषार्चितमङ्गलमूर्तये ।
नम इक्ष्वाकुवंश्याय रामायापन्निवारिणे ॥ २४॥

मञ्जुलादर्शविप्रेक्षणोत्सुकैकविलासिने ।
नमः पालितभक्ताय रामायापन्निवारिणे ॥ २५॥

भूरिभूधरकोदण्डमूर्तिध्येयस्वरूपिणे ।
नमोऽस्तु तेजोनिधये रामायापन्निवारिणे ॥ २६॥

योगीन्द्रहृत्सरोजातमधुपाय महात्मने ।
नमो राजाधिराजाय रामायापन्निवारिणे ॥ २७॥

भूवराहस्वरूपाय नमो भूरिप्रदायिने ।
नमो हिरण्यगर्भाय रामायापन्निवारिणे ॥ २८॥

योषाञ्जलिविनिर्मुक्त लाजाञ्चितवपुष्मते ।
नमस्सौन्दर्यनिधये रामायापन्निवारिणे ॥ २९॥

नखकोटिविनिर्भिन्नदैत्याधिपतिवक्षसे ।
नमो नृसिंहरूपाय रामायापन्निवारिणे ॥ ३०॥

मायामानुषदेहाय वेदोद्धरणहेतवे ।
नमोऽस्तु मत्स्यरूपाय रामायापन्निवारिणे ॥ ३१॥

मितिशून्य महादिव्यमहिम्ने मानितात्मने ।
नमो ब्रह्मस्वरूपाय रामायापन्निवारिणे ॥ ३२॥

अहङ्कारेतरजनस्वान्तसौधविहारिणे ।
नमोऽस्तु चित्स्वरूपाय रामायापन्निवारिणे ॥ ३३॥

सीतालक्ष्मणसंशोभिपार्श्वाय परमात्मने ।
नमः पट्टाभिषिक्ताय रामायापन्निवारिणे ॥ ३४॥

आपदामपहर्तारं दातारं सर्वसम्पदाम् ।
लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ॥ ३५॥

फलश्रुति

इमं स्तवं भगवतः पठेद्यः प्रीतमानसः ।
प्रभाते वा प्रदोषे वा रामस्य परमात्मनः ॥ १॥

स तु तीर्त्वा भवाम्भोधिमापदस्सकला अपि ।
रामसायुज्यमाप्नोति देवदेवप्रसादतः ॥ २॥

कारागृहादिबाधासु सम्प्राप्ते बहुसङ्कटे ।
अपन्निवारकस्तोत्रं पठेद्यस्तु यथाविधि ॥ ३॥

संयोज्यानुष्टुभं मन्त्रमनुश्लोकं स्मरन् विभुम् ।
सप्ताहात्सर्वबाधाभ्यो मुच्यते नात्र संशयः ॥ ४॥

द्वात्रिंशद्वारजपतः प्रत्यहं तु दृढव्रतः ।
वैशाखे भानुमालोक्य प्रत्यहं शतसङ्ख्यया ॥ ५॥

धनवान् धनदप्रख्यस्स भवेन्नात्र संशयः ।
बहुनात्र किमुक्तेन यं यं कामयते नरः ॥ ६॥

तं तं काममवाप्नोति स्तोत्रेणानेन मानवः ।
यन्त्रपूजाविधानेन जपहोमादितर्पणैः ॥ ७॥

यस्तु कुर्वीत सहसा सर्वान् कामानवाप्नुयात् ।
इह लोके सुखी भूत्वा परे मुक्तो भविष्यति ॥ ८॥